विपादे कृत्वा बध्नाति — sus 33—40. अथ लौकिके ग्रामे वैदिके ग्रामे च स्त्रोत्तामाक्रोशे च पुरुषाणां च भेषज्यमुच्यते। सर्वस्मिन्स्तहिताविधिकर्मणि प्रधानकर्ममध्ये नव घट यत्प्रथममाम्प्यापितमुत्तरततस्तेनोदकेन हिरण्यवर्णा इति सूक्तेन (1. 33) अभिमन्त्रितेन कारयिताभिषेचयेत्। सर्वत्र मेधाजननादिकर्मसु। तत पश्चान्मणिबन्धनादिकर्म कुर्यात्। भेषज्येष्वभिषेक न कुयात्। अभ्यातानान्त कृत्वा अघद्विष्टा इति सूक्तेन यवमणिं सपात्याभिमन्त्र्य पुन सूक्त जपित्वा बध्नाति। लौकिके आक्रोशे वैदिके च ब्राह्मणस्य ग्रामे चाक्रोशे च क्रूरचक्षुर्दृष्टिनिपाते च पिशाचरक्षादिषु भैषज्य समाप्त। अथ रक्षोग्रहे भेषज्यमुच्यते। आज्यतन्त्र कृत्वा श नो देवीति सूक्तेन पृश्निपर्णीमोषधि पिष्ट्वा सपात्याभिमन्त्र्य पुन सूक्त जपित्वा शरीरं प्रलिम्पति। अभ्यातानाद्युत्तरतन्त्र। पापगृहीते च स्त्रीगर्भस्रावे च मृतापत्याया च क्रव्यादगृहीते च पिशाचगृहीते च रक्षोभयभैषज्य समाप्त। अथ राजयक्ष्मादिभैषज्यमुच्यते। तन्त्र कृत्वा वरणो वारयाता इति तृचेन वरणवृक्षमणि बध्नाति। राजयक्ष्मादिपूगव्याधिषु श्वेतोदुम्बर कुष्ठाद्यष्टादशज्ञातिषु ज्वरादिसर्वरोगेषु भैषज्य समाप्त। अथ वातविकारे भैषज्यमुच्यते। पिप्पली क्षिप्तभेषजीमिति सूक्तेन पिप्पलद्रव्य . आशयति। वातविकारे धनुर्वातगुल्मे वातशूले क्षिप्तवातप्रदेशे कमकृते वाते उत्पन्ने सर्वव्याधिविकारे भैषज्य समाप्त। जलोदरे भैषज्य मुच्यते। विद्रधस्य बलासस्येति तृचेन सूक्तेन व्याधितस्य मूर्ध्नि सपातानानयति। सर्वव्याधिविसर्पणे प्रकोपे द बलासे च अन्तर्विसर्पणे च अचिविसर्पणे च विद्रविसर्पणे(?) च हृदयामये च अज्ञातराजयक्ष्मणि च एतेषा भैषज्य समाप्त। या बभ्रव इति सूक्तेन दशवृक्षशकलानि लाक्षाहिरण्येन वेष्टित मणि कृत्वा बध्नाति। सर्वव्याधिभैषज्य समाप्त — su 41 अथ क्षेत्रियव्याधिभैषज्यमुच्यते क्षेत्रियो व्याधिर्लिङ्गी पितृपर्यागत क्षेत्रियरोग कुष्ठक्षयरोग ग्रहणीदोष सर्वशरीरविस्फोटकार — su 43 बभ्रोरर्जुन काण्डस्येत्यृचा अर्जुनकाष्ठ यवबुस तिलपिञ्जिका च एकत्र वीणि बद्धा बध्नाति। आकृतिलोष्ट जीवकोषणी बद्धा बध्नाति। वल्मीकमृत्तिका जीवकोषणा बद्धा बध्नाति। एवेवत पश्चोत्तम जीवकोषणोत्युच्यते —

## Kandika 27

sus 3 4 शालातृणानि गते प्रक्षिप्य तस्मिन्गर्ते व्याधितमपवेश्य तत आचामयति अवसिञ्चति। समाप्त क्षेत्रियस्य भैषज्य — su. 5 अथ ब्रह्मग्रहे भेषज्यमुच्यते। दशवृक्षेति सूक्तेन वृक्षविकल्पेन पला-

शादिदशवृक्षशकलानि गृहीत्वा लाक्षाहिरण्यवेष्टितं मणिं कृत्वा बध्नाति — sū 6 दश ब्राह्मणा अथर्वाङ्गिरस सुहृदो दशवृक्षेति सूक्तं जपन्तो व्याधितं शरीरमभिमृशन्ति — sū 7 पुनः चेचियभैषज्यान्युच्यन्ते — sū 9 उदकतृषाक्रान्तभैषज्यमुच्यते — sū 13 सवासिनाविति सूक्तेन मन्थघटमभिमन्त्र्य पाययति व्याधिताव्याधितौ एकवस्त्रपरिहितौ सन्तौ — sū 14 17 अरुषोउदरगण्डुलकभैषज्यान्युच्यन्ते। इन्द्रस्य या महीति सूक्तेन कृष्णचणकान्घृतमिश्राञ्जुहोति।

गोवालचिचितं शरसधं परिवेष्ट्य (cf sū 26) पाषाणेन चूर्णयति। अग्नौ प्रतपति। ततः सूक्तान्ते ऽग्नौ आदधाति — sū 18 सव्ये हस्ते पांसून् (Cod पांश) कृत्वा दक्षिणेन विमृज्य दक्षिणामुखः स्थितः सूक्तं जपित्वा व्याधितस्योपरि किरति। अरुषोगण्डुलकानां भैषज्यं — sū 19 पांसून् (Cod पांश) मर्दयति हस्ताभ्यां व्याधितं — sū 20 पलाशोदुम्बराद्याः समिध आदधाति। समाप्ता उदरकृमय उदरगण्डुलकाश्च दृष्टकृमयश्च तेषां सर्वेषां भैषज्यं — sū 21 अथ गोकृमिभैषज्यान्युच्यन्ते — sū 26 उद्यन्नादित्य इति सूक्तेन घृतमिश्रान्कृष्णचणकाञ्जुहोति। उद्यन्नादित्य इति सूक्तेन शरं गोवालवेष्टितं धारयति पाषाणेन etc essentially as in the comment upon sūs 14 20 — sūs 27—28 सर्वव्याधिभैषज्यमुच्यते। आज्यतन्त्रं कृत्वा व्याधितं पर्वसु बद्ध्वा। अचीभ्यां त इति सूक्तेनोदपात्रं संपात्य ततः पुनः सूक्तं जपित्वावसिच्य व्याधितस्य पर्वग्रन्थिर्विमुच्यते। ततः उत्तरतन्त्रं। समाप्तमचिरोगनासिकाकर्णशिरोजिह्वाग्रीवाराजयक्ष्मादिसर्वभैषज्यं — sū 29 हरिणस्येति सूक्तेन हरिणशृङ्गमणिं बध्नाति। हरिणशृङ्गेण सहोदकमाचमयति। अथोषाकाले एतत्कर्म। हरिणचर्मशङ्कुधानं प्रज्वाल्योदकेन प्रक्षिप्य ततो व्याधितमवसिञ्चति — sū 32 बालरोगगृहीते च मैथुनदोषभैषज्यान्युच्यन्ते। पूतिगन्धमत्स्यसहितमोदनं व्याधिताय प्रयच्छति भक्षणार्थं — sū 33 अरण्यतिले प्रज्वालितमुदपात्रमभिमन्त्र्य प्रक्षिपति उषाकाले। अवसिञ्चति व्याधितं। मैथुनराजयक्ष्मणि भैषज्यं। अरण्यशुष्केण अरण्यगोमयेनावज्वालितमुदकमभिमन्त्र्यावसिञ्चति उषाकाले। मार्जनमाचमनं। चित्यादिभि (Cod चित्याद्या c k 1c 8 16) प्रज्वालितमुदकमभिमन्त्र्य व्याधितमवसिञ्चति। मार्जनमाचमनं च। केचित्तिलपर्णादिचतुर्षु कर्मसु अरण्ये अवसेकमिच्छन्ति केचिद्गृहे अवसेकमिच्छन्ति — sū 34 अथ सर्वभैषज्यान्युच्यन्ते। आ गाव इति दशभिः सूक्तैः (1v 21—30) मृच्छीर्षत्या इत्यृचा घटमुदकपूर्णं संपात्याभिमन्त्र्य व्याधितमवसिञ्चति —

Kandika 28

sū 1 स्कन्दविषभये भैषज्यान्युच्यन्ते। तदर्थदेवतायै नमस्कारं कृत्वा ततो ब्राह्मणो जज्ञे वारिदमिति सूक्ताभ्यां (IV, 6, 1 7) उदकमभिमन्त्र्य आचामयति समीक्षति विषदुष्टं — su 2 कुमुकवृक्षशकल सहोदकमभिमन्त्र्य तत आचामयति अभ्युक्षयति दूर्वावज्वालितमुदकमभिमन्त्र्य व्याधितमवसिञ्चति। जीर्णहरिणचर्मावज्वालित मुदके प्रक्षिप्य तमभिमन्त्र्य ततोऽवसिञ्चति। मार्जनिकावकरतृणैरवज्वालितमुदकमभिमन्त्र्यावसिञ्चति — su 3 उदपात्र सपात्य तत आप्लावयति विषदुष्टं। विषलिप्ताभ्यां सक्तुमन्यमुपमथ्य ततोऽभिमन्त्र्य पाययति। मदनफलानि प्रत्युचमभिमन्त्र्य प्रत्युच भक्षयति यथा च छर्दयति तथा च कर्तव्यं — sū 5 अथ शस्त्राद्यभिघाते रुधिरप्रवाहे भैषज्यान्युच्यन्ते। रोहण्यसीति सूक्तेन लाक्षोदकं क्वथितमभिमन्त्र्य व्याधिदेहमवसिञ्चति। उषाकाले कर्म। अस्थिभङ्गे रुधिरप्रवाहे शस्त्राभिघातादौ भैषज्यं — su 7 रक्षोभैषज्यमुच्यते। सद्यप्या सध्या प्रसिद्धा — su 8 अथ सर्वव्याधिभैषज्यमुच्यते। भवाशर्वौ मन्वे वामिति सूक्तेन (IV 28) — su 9 सर्वभूतग्रहभैषज्यमुच्यते। शमीपर्णचूर्णं शमीफले कृत्वाभिमन्त्र्य सक्तुमध्ये ददाति भक्षार्थं रक्षोग्रहभैषज्यं — su 10

शमीचूर्णं शमीफले कृत्वाभिमन्त्र्यालंकारे ददाति — su 11

शमीचूर्णं शमीफले कृत्वाभिमन्त्र्य व्याधितस्य शाला चूर्णैं परिकिरति — su 12 अमतिगृहीते पुरुषे भैषज्यमुच्यते। प्रज्ञानष्टे अज्ञानगृहीते अधर्मगृहीते त्रिवर्गे च विनष्टे द्यूतक्रीडादिप्रवृत्ते कुबुद्धि-भैषज्यं — u 13 राजयक्ष्मणि शिरोरोगे कुष्ठभये सर्वगात्रवेदनायां भैषज्यमुच्यते। यो गिरिष्वजायत इति सूक्तेन (V 4) अश्वत्थो देवसदन इति द्वे (V 4 3 4) गर्भो अमीति तृचेन च (V 25 7 9) कुष्ठपिष्टं नवनीत मिश्रमभिमन्त्र्य अप्रतिहारं व्याधितशरीरं प्रलिम्पति — su 14 अथ शस्त्राभिघाते भैषज्यमुच्यते। रात्री मातेति सूक्तेन (V 5) दुग्ध लाक्षा क्वाथयित्वाभिमन्त्र्य पाययति। शस्त्राभिघाते काष्ठाभिघाते पाषाणपतनाभिघाते अग्निदाघे सर्वशरीराभिघाते भैषज्य समाप्तं su 15 सूतिका स्त्री अरिष्टकस्य भैषज्यमुच्यते। ब्रह्म जज्ञानमनाप्ता ये सह सधार एव ते इति सूक्तेन (V 6) भक्तमभिमन्त्र्य ददाति भक्षणार्थं — su 16 समाप्तं स्त्रीप्रसवदोषे सूतिकारोगे च भैषज्यं। अद्भुतदर्शने दोषनाशनभैषज्यं समाप्तं। सर्वाद्भुतेषु भक्तकर्म वा मन्त्रकर्म वा आचमनकर्म वा कुर्यात्। यानि चरकादिवैद्यकेषु अद्भुतानि पठ्यन्ते

तेषां सर्वेषामिय शान्तिभैषज्यं भवति — su. 17 अथ

सर्वव्याधिभैषज्यमुच्यते . — sū. 19 द्वौ सपातौ भूमौ दत्त्वा ततः सपातिता भूमिमृत्तिका गृह्य(!) तत उदपात्रे प्रक्षिप्य . व्याधितमाप्लावयति —

## Kaṇḍika 29

sū. 1 सर्वविषभैषज्यमुच्यते — sū. 2—4 यत्ते अपोदकमिति ऋचा (v 13 2) अप्रदक्षिणं परिक्रामति व्याधित (!)। विषस्तम्भनभैषज्यं। शिरसि शिखा बध्नाति। श्वेतवस्त्रेण ग्रन्थिं बध्नाति। ग्रीवायां ग्रन्थिं बध्नाति। विषं न विसर्पति देशस्थितं भवति शरीरे न सर्पति विषस्तम्भनं भवति — sū. 5 वृषा मे रव इत्यृचा (v 13 3) यस्मिन्स्थाने दष्ट(!) तं स्थानं न पीडयति। ऋचं जपित्वा दंशादिषमन्यत्र गच्छति। विषनाशने भैषज्यं — sū. 6 चक्षुषा ते चक्षुरित्यृचा (v 13 4) आचार्यस्तत प्रदक्षिणं परिक्रामति। अपेह्यरिरसीत्यृचं (vii 88 1) जपित्वा तृणानि प्रज्वाल्य ततो अग्निमभिमुखं प्रक्षिपति — sū. 7 अपेह्यरिरित्यृचं (vii 88 1) जपित्वा यतो दृष्टस्ततो (!) ज्वलिततृणानि क्षिपति दर्शनेन — sū. 8 कैरात पृश्न इत्यृचा (v 13 5) उदकं गृहतृणावज्वालितमभिमन्त्र्य व्याधितं पाययति मोचति च — sū. 9 असितस्य तैमातस्येति (v 13 6) ऋचा आलीञ्यापाशं सपाताभिमन्त्र्य बध्नाति — sū. 10 आलिगी च विलिगी च उरुगूलाया इति च द्वाभ्यां (v 13 7, 8) मधुमक्षिकामधुवृक्षमृत्तिकामभिमन्त्र्य पाययति — sū. 14 अलाबुवृत्तं सपाताभिमन्त्र्य बध्नाति — sū. 15 अथ दुष्टवक्त्रा मुखस्तम्भमुच्यते। एका च मे यद्येकवृषो ऽसीति सूक्ताभ्यां (v 15, v 16) कलायपक्वा (!) मधूदकं च एकत्र कृत्वा व्याधितं पाययति। दुष्टवक्त्रामुखबन्धनभैषज्य (!)। दुष्टपुरुषबन्धन। परोक्षेण वदन्ति — sū. 16 यद्येकवृष इति सूक्तेन (v 16) भोजनमभिमन्त्र्य भक्षयति। पापभैषज्य — sū. 17 यद्येकवृष इति सूक्तेन (v 16) गृहद्वारमभिमन्त्र्य ददाति अपिदधातीत्यर्थ — sū. 18 अथ ज्वरभैषज्यमुच्यते . — sū. 19 अग्निस्तक्मानमिति सूक्तेन (v 22 1) न्यग्रस्रुवेण मूर्ध्नि सपातानानयति। तत उत्तरतन्त्र। एकस्मिन्नन्ते द्वावाग्निप्रणयन — sū. 20 अथ कृमिभैषज्यमुच्यते। करीरमूलं सपाताभिमन्त्र्य बध्नाति। , गोवालैः करीरकाष्ठं वेष्टयित्वा सूक्तं जपित्वा पाषाणेन चूर्णयति। तत सूक्तेनाग्नौ प्रतपति। तत सूक्तेनादधाति — sū. 24 एवविशत्युशीराणां मूलान्यभिमन्त्र्य ततः पाषाणेन कदयति(!) ततः सूक्तं जपित्वा उशीराग्निना दहति — sū. 26 . एकविंशत्युशीरपिञ्जूलीसहितं सपाताभिमन्त्र्य ततो व्याधितमाप्लावयति — sū. 27.

अथ राक्षसभैषज्यमुच्यते। वयोनिवेशनकाण्डमूत — सू. 28
अथ सर्पविषभैषज्यमुच्यते सर्पविषलिङ्गपताप — सू 30 श्लेष्म-
भैषज्यमुच्यते। उदकेन इद क्रियते। अप्स्विद कृत्वा तस्यापि प्रक्षाल्य।
अक्षिस्रसमिति सूक्तेन काण्डसकल सपात्य तत श्रवणेन सपातवतीव-
सिञ्चति व्याधित • —

## Kandika 30

सू 1 2 अथाचिरोगे भैषज्यमुच्यते। सर्षपकाण्डमणि सपात्या-
भिमन्त्र्य बध्नाति सर्षपतैलेन सपातवन्त करोति। आज्येन प्रधान।
अङ्गानि सर्षपतैलेनाभ्यज्य मणि दा ततो बध्नाति — सू 3
सर्षपशाक सपर्षतैलेनाभ्यक्तमभिमन्त्र्य व्याधिताय प्रयच्छति —
सू 5 मलचीर मुखेन ग्राह्य ततोऽभिमन्त्र्य अङ्कि अनिणो व्याधितस्य।
मूलचीर चीरपाटिकाख्य तदुच्यते — सू 6 मूलचीर
भवयति — सू पित्तज्वरभैषज्यमुच्यते। तामसुवेण मूर्ध्नि सपाता
नानयति। अश्मिन्नन्ते (?) दावाग्निप्रशयन कुर्यात — सू ९ अथ
केशवृद्धिकरणे केशपतने भैषज्यमुच्यते। वृक्षभूमिजातौषधीभिरव
ज्वालितमुदकमभिमन्त्र्यावनचेत्र्वसिञ्चति — सू 9 मधु क्वाथ-
यित्वा विभीतका क्वाथयित्वाभिमन्त्र्य व्याधितनवसिञ्चति —
सू 10 दारुहरिद्राहरिद्रे (?) च द्वाभ्या क्वाथयित्वाभिमन्त्र्याव
सिञ्चति — सू 11 अथ उदरतुण्डभैषज्यमुच्यते। कृष्ण नियान ससु
पेरिति सूक्ताभ्या (vi 2? vi 23) चित्याद्योषध्या सहितमुदकमभि-
मन्त्र्य ततो व्याधितमवसिञ्चति — सू 12 कृष्ण नियान ससुपो
रिति सूक्ताभ्या (vi 29 vi 23) मरुतो यजते पाकयज्ञविधानेन यथा
वरुण (cf Kauç 41 3)। मारुत चौरोदन मारुतगृत etc a in Kauç
40 । Then follow the practices described at Kauç 41 4 7 along
with which are employed the pratikas mentioned at the beginning
of his rite — सू 13 अथ हृदयदाघे जलोदरे कामले च भैषज्या-
न्युच्यन्ते। मधुदकमनुलोममाहार्य तत्र वन्तीकतृणानि प्रक्षिप्य
व्याधितमवसिञ्चति — सू 14 अथ गण्डमालाभैषज्यमुच्यते। एत च या
इति सूक्तेन गोपामूलिका पशाग्रत्य (?) व्याधिका उपरी प्रक्षाल्य अपस्माद्-
दत्तमिध आदधाति — At this point there is a lacuna in the MS
involving the omission of the comment upon the remaining sutras
of this kandika as well as of the first three sutras of the next one
Sūtra 16 is commented upon by Keçava at length in connection

with Ka̧r 31 16 The comment upon sū 14 of this kaṇḍ ka is followed directly by the treatment of 31 4 —

Kaṇḍika 31

sū 4 पुरोडाश पयो etc जुहोति । व्रीहीन् etc आवपति । शान्तवृक्षसमिध आदधाति । रचोग्रहभैषज्य — su 5 अथ सर्वभैषज्यमुच्यते । वैश्वानरो न ऊतये आतावान वैश्वानरमिति सूक्ताभ्या (vi 35 vi 36) उदपात्रमभिमन्त्र्य पाययति । सलुमन्त्र्य पाययति । हरिद्रा सर्पिषि पाययति । अप्सु घृतमुदकम भिमन्त्र्य पाययति — sū 6 अपवादे भैषज्यमुच्यते धर्मभाषणमधर्मे च प्रवर्तने तस्यापवाद (!)। अभ्यातानान्त कृत्वा अस्माद् यौरिति पूर्वेण (vi 44 1) स्वयपतिते गोशृङ्गे उदक कृत्वाभिमन्त्र्याचमयति अभ्युत्ति च — su 7 अथ उदरे वा हृदये वाङ्गे वा सर्वाङ्गे वा शूले उत्पन्ने भैषज्यमुच्यते। या ते रुद्र इति सूक्तेन शूलमणि सवार्थाभिमन्त्र्य वध्नाति। शूल लोहमणि पाषाणे वा दारिलरुद्रनत । या ते रुद्र इति व्याधित मभिमन्त्रयते रुद्रभाष्यमत । शूलभैषज्य समाप्त — su 8 रचोग्रहे भैष ज्यमुच्यते । उत्सूर्य इति चित्यावोषधीभि सहोदकघटमभिमन्त्र्य व्याधि तमवसिञ्चति । शम्युदकेन सह अवसिञ्चति । शमीविमल मुदकसहित अवसिञ्चति । शीर्षपर्णीमुदके () दत्त्वा अवसिञ्चति — su 9 दुष्टगण्डविरिष्टभैषज्यमुच्यते । तैलमभिमन्त्र्य व्याधित गण्ड समार्ष्टि — su 10 स्तूणाया निकषति घृष्यति व्रण । रुधिरकृते दुष्टव्रणे दुष्टगण्डव्याधिभैषज्य समाप्त — su 11 अचित (?) व्रणभैषज्यमुच्यते । गोमूत्रमभिमन्त्र्य तेन व्रणमर्दयति । यस्य व्रणस्य मुख नास्ति। अचतदुष्टव्रणे भैषज्य — su 15 तृणरजस्य फेनमभिमन्त्र्य व्रण प्रलिम्पति। यस्य गण्डदुष्टस्य रुधिर न च वहति तस्य। समाप्तमचतव्रणभैषज्य sū 16 गण्डमालाभैषज्यमुच्यते। शङ्ख घृष्ट्वाभि मन्त्र्य गण्डमाला प्रलिम्पति। श्वानलाला कुर्कुटलाला ( for कुर्कुर°?) प्रलिम्पति । जलौकामभिमन्त्र्य गण्डमालाया ससर्जयति रुधिरप्रवा हनार्थ । गृहगोधिकामभिमन्त्र्य गण्डमालाया ससर्जयति — sū 17 सैन्धवलवण चूर्णयित्वाभिमन्त्र्य गण्डमालाया उपरि प्रकिरति। तत स्तस्योपरि निष्ठीवति मुखलाला प्रक्षिपति — su 18 अथ पक्षिणो ऽभिघाते भैषज्यमुच्यते । श्वानपदस्थानमृत्तिकामभिमन्त्र्य (Cod °का भि°) पचाहत (!) देश प्रलिम्पति । पचहतभैषज्य — su 19 शुनो मक्षिकामभिमन्त्र्याग्नौ प्रक्षिप्य ततो धूपयति व्याधिप्रदेश । काकगृध्रकपो

तस्मिनादीनि पचिणाभिघाते (') भैषज्य समाप्त — sū 20 अथ गण्ड भैषज्यमुच्यते। ग्लौरित प्र पतिष्यतीति (vi 83 3ᶜ) अर्धर्चेन गोमूत्रमभिमन्त्र्य गण्डमर्दयति। प्रचालयति।. दन्तमल प्रलिम्पति। तृणरजफेन प्रलिम्पति। समाप्त गण्डभैषज्य गण्डस्फोटिका(!) इत्यर्थ — sū 21 गर्दभायुक्तगण्डभैषज्यमुच्यते (')। शान्त्युदकमभिमन्त्र्य चत प्रोचति। आज्य जुहोति। ततो मनसा सकल्पयति सपातान्ददाति। समाप्त गर्दभदशजातिपिकादिचतगण्डभैषज्य — sū 2? पापगृहीते जलोदरे च भैषज्यमुच्यते — su ?6 विषे उपविषे स्थावरजङ्गमे च भैषज्यमुच्यते। मक्षिकाया च भैषज्य — su 27 अथ कासे श्लेष्म पतने च भैषज्यमुच्यते। भोजनमभिमन्त्र्य ददाति। सक्तुमन्थमभिमन्त्र्य भचयति। उपस्थानमादित्यस्य। उदकमभिमन्त्र्याचमयति — su 28 केशवृद्धिकरणे भैषज्यमुच्यते। काचोमाचीफलमणि बध्नाति। जीवन्तीफल बध्नाति। भृङ्गराज बध्नाति। केशदृढीकरणे केशजनने ह्रस्वकेशेषु वृद्धकरणभैषज्य। माषतिलादिकृष्णमन्न भचयित्वा। काचोमाचीफल भृङ्गराजाभ्या सहोदकमभिमन्त्र्य रात्रौ ब्राह्मे मुहूर्ते ऽवसिञ्चति —

## Kandika 32

sū 1 जम्भगृहीते भैषज्यमुच्यते। स्नानमभिमन्त्र्य बालकाय प्रयच्छति पानार्थं पति करोति कर्ता करोति। दु स्वनाशने भैषज्य — sū ? पाययति बालक पिता वा माता वा पाययति तयोर्परि दुह्यते अश्ववदुग्धा — su 3 सर्वव्याधिभैषज्यमुच्यते — sū ? वृश्चिकभैषज्यमुच्यते। तिरश्चिराजेरित्यष्टर्चेन (vi 56 1 8) ज्येष्ठीमधु 1 r यष्टि°) पिष्टाभिमन्त्र्य पाययति — su 6 चैत्रमृत्तिका जीवकोषणीचर्मवेष्टिता मणि कृत्वा सपात्याभिमन्त्र्य बध्नाति। वृश्चिकमशकभैषज्य। जीवत पशुचर्म जीवकोषणीत्युच्यते — su 7 यानियानि पायनान्युक्तानि तानि तिरश्चिराजेरित्यस्य सूक्तस्य भवन्ति। समाप्त वृश्चिकपिपीलिकामशकदशशार्कोटजलूकाभैषज्य(') — su 8 अथ गण्डमालाभैषज्यमुच्यते। अप चिता लोहिनीनामिति द्वाभ्या (vi 74 1—2) आ सुस्रस इत्येका (vii ?6 1) एताभिस्तिसृभिर्वंशधनुष कृष्णोर्णमयी ज्या कृत्वा चित्रितेन शरेण गण्डमाला विध्यति प्रयुच । चय शरा (C d शिरा) भवन्ति — sū 9 या ग्रैव्या अपचित इति चतुर्थ्या ऋचा चतुर्थेन शरेण गण्डमालामभिनिधाय विध्यति — su 10 कृष्णोर्णज्यावज्वालितोदकम भिमन्त्र्य उषाकाले अवसिञ्चति व्याधित — sū. 11 अथ राजय

च्वभैषज्यमुच्यते । तृचेन वीणातन्त्रीखण्ड सपाल्याभिमन्त्र्य बध्नाति — su 12 वाद्यवीणा तस्या गम्वर विष्पोवाद्यवीणाकठ (?) शिखड वीणातन्त्री बद्धा सुपात्याभिमन्त्र्य बध्नाति (?) — su 13 स्वयपतितवीरिणतण्डचयमेकत्र वद्धा सपात्याभिमन्त्र्य बध्नाति — su 14 जलोदरं वरुणगृहीते भैषज्यमुच्यते — su 17 अथ ज्वरभैषज्यमुच्यते । नमो रूरायेति सूक्तद्वयेन (vii 116, vii 117) खट्वाया व्याधित कृत्वा बद्धा तत अध खट्वाया व्याधितमुपवेश्य तत उदकमभिमन्त्र्य व्याधितमवसिञ्चति । व्याधित सिच्यमान यथा मण्डूकमभि सिच्यते तथा कुर्यात् — su 18 अथ सर्वभैषज्यमुच्यते । अर्धसूक्तेन व्याधित अभिमृशति — su 20 सर्वविषभैषज्यमुच्यते — su 21 इन्द्रस्य प्रथम इत्यर्धसूक्तेन पैद्व कीटक तालिधौति लोकप्रसिद्धा त (Cod ते) पिष्ट्वाभिमन्त्र्य नस्त ददाति दक्षिणनासिकापुटे — su 2? अथ सर्पभये भैषज्यमुच्यते । पैद्व श्वेतदन्तवेष्टितमभिमन्त्र्य यत्र सर्पभय तत्र निखनति । पैद्व हिरण्यवर्णसदृश कीटश्चित्रितो वामपैद्व इत्युच्यते — su ?4 आरे अभूद्विषमित्यृचान्तेन (?x 4 26) उलूक मतामाभिमन्त्र्य ततो विषव्रण दृष्ट्वा तत्समुख क्षिपति — su 2? सर्पादशने यतो दृष्टस्तत (?for दृष्टस्ततो) क्षिपत्युलूक — su 26 27 अथानुक्तेषु कौशिकीयेषु सर्वव्याधिभैषज्येषु उक्तेषु चानुक्तेषु वापठितेषु तत्र सर्वभैषज्यमुच्यते । सर्वव्याधिभैषज्येषु मन्त्र ओषधिवनस्पतीनामनुक्तान्यप्रतिपिद्धानि भैषज्यानां अहोलिङ्गाभि रुच्यते अहोलिङ्गेन गणेन तानि कर्तव्यानि । आशानामाशापालेभ्य इत्येका etc Here follows the list of pratikas given as the अहोलिङ्गगण by the gaṇamālā Ath Pariç 34 3? and quoted above p 59 note 2 then the text continues as follows यानि च वै प्रतीकान्युच्यन्ते तान्यभिमन्त्रणेन सर्वव्याधिभैषज्यानि भवन्ति तान्युच्यन्ते । अचिक्ष्या ते ( 33 1) मुञ्चामि त्वा (i 10 4) उत देवा (iv 13 1) आवतस्त (v 30 1) शीर्षक्ति (x 8 1) अहोलिङ्गगण । एते पञ्चप्रतीके अन्यतमेनैकेनाभिमन्त्रण कुर्यादित्यर्थ । Then follows a list of many of the commoner practices described in the preceding kaṇḍikās of this adhyāya, all of which if performed while reciting the अहोलिङ्गगण, are accounted efficacious against all diseases (सर्वव्याधिषु भैषज्यानि) as though they were performed with their own proper mantras (अथवा तै सूक्तै कर्तव्यानि । अथवा अहोलिङ्गेन कर्तव्यानि) *Then follows a catalogue* of the diseases many of which are treated in the preceding kaṇḍikās the others are known in the later medical çāst as उक्तव्याधीना परि

गणन क्रियते — su ?8 अथ स्त्रीकर्मणो विधिं वक्ष्याम । पुत्रकामार्थे स्त्रीकामार्थे स्त्रियै मृतापत्यार्थे रजोनाशे च शान्तिरुच्यते —

Kandika 33

su. 1 अथ प्रसवकाले इदं कर्म क्रियते यथा सुखेनैव प्रसवो भवतीत्यर्थं । अथ प्रसूतिकरणमुच्यते — su 3 छिद्यमानासु मुञ्जेषीकासु गर्भसम्मरणं भवेत् । एकं कर्म — su ? शालाग्रन्थीन्विचृतति । द्वितीयं कर्म — sū. 6 कटिप्रदेशे बध्नाति तृतीयं कर्म । केचिद्घटं ते पुष्पन्निति सूक्तेन तैलमभिमन्त्र्य प्रसवकाले अभ्यञ्जनं कुर्वन्ति — su 8 अन्या वो अन्यामवेति (') ओषध्यमा एव एकत्र बध्नाति — su 9 सर्वत्रौषधिखननमेतेन विधानेन कर्तव्यं । यत्र क्वाचिदोषधिखनन तत्र सर्वत्रानेन विधानेन कर्तव्यं — su 18 यदि तान्येकत्र भवन्ति तदा पुत्रो जायते । विज्ञानकर्मेदं — s? ?0 यदि पुनमधेय सृष्णन्ति तदा कुमारो जायते —

Kandika 34

sū. 1 अथ वन्ध्याप्रजननकरणमुच्यते — sū 2 ततो गृहे पुरोडाश प्रमन्द कटुपा अलंकारान्सपात्य प्रयच्छति — su 3 अथ मृतापत्याया स्त्रियस्तस्या शान्तिरुच्यते । गर्भस्रावे जातमात्रे मृते वा स्त्रिया वा पुरुषे वा बाले वा युवाने (') वा मृते इदं कर्म । त्रीणि मण्डपानि प्राग्द्वाराणि कृत्वा एकस्मिन्मण्डपे अभ्यातानान्त कृत्वा —
su 4 पालाशपत्रे — su ? सीमेपूपरि स्त्रीमधिष्ठाप्य तेनोदपात्रेणाप्लावयति — su 10 प्राकप्रथिमद्वारेषीकं (') द्वारोपूपरि बद्ध्वा ततो निःसालामिति (su 14) सूक्तेनौदुम्बरी समिध मृतापत्यार्थे आदधाति —
sū .2 पतिलाभकर्माण्युच्यन्ते — su 13 आशयति कुमारी —
sū. 14. मृगाखरमृत्तिकाया वेदिं कृत्वा हिरण्यालंकाराग्गुग्गुलमौच च यथोक्तान्सपात्य वन्धन धूपन प्रलेपन कुयात् । पूर्वस्य संहितांविधि श्लोक (cf Ath Paddh and Keçava at Kauç ?9 9) ।

आवपेत्सुरभिगन्धान् चीरे सर्पिस्तथोदके ।
एतद्रायनमित्याङ्गरीच तु मधुना सह ॥ —

sū. 15 दक्षिणामुखी कुमारी प्रक्रामति — su 16 भाग सपात्य भगस्य नावमित्यृचा उत्तारयति — sū 17 सन्नदामतस्त्रा वत्सान्वन्धयित्वा सपात्याभिमन्त्र्य कुमारी मोचयति । स्वयं न कर्ता । यदि प्रदक्षिणं मोचयति तदा पतिलाभ — sū 18. वृषभ

विसर्जयति — sū 21 आगमकृषर आश्रयति आज्यतन्त्रे भगिनीक (!) — su 23 तत अर्यम्ण इत्यर्धर्चेन गृहाभ्यन्तरे कोणे बलिहरण करोति — su 24 यत आगच्छति काकस्तत आगच्छति वर । समाप्तानि पतिलाभकर्माणि —

Kandikā 35

sū 1 पुंसवनान्युच्यन्ते — su 2 नक्षत्रकल्पे उक्तानि पुनक्षत्राणि — su 3 बाण विवृहति। शरकर्माणि सपात्याभिमन्त्र्य बध्नाति — sū. 4 अथाण्डे वृहतिपालाशविदार्यौ (!) वा एकत्र पिष्ट्वाभिमन्त्र्य दक्षिणेनाङ्गुष्ठेन दक्षिणस्या नासिकाया नस्त ददाति। पुत्रार्थं कर्म पुंसवनमित्युच्यते — sus 5 6 Keçava s exp lanation is essentially the same as that of Ath Paddh and Daç Kar — su 7 कें (!) लूनाश्च पलाशत्सर्पनिर्वर्ते (!) निघृष्य शिश्ने आधाय ततो मैथुन करोति । समाप्त गर्भाधान — sūs 8 9 पुन पुंसवनमुच्यते। मधुमन्थे ऽस्मि निचियाभिमन्त्र्य पाययति स्त्री — su 10 शमीगर्भाश्वत्थस्याग्नि कृष्णोर्णया वेष्टयित्वा सपात्याभिमन्त्र्य बध्नाति आज्यतन्त्रे। समाप्त पुन पुंसवन — su 11 अथ गर्भाधानमुच्यते। हस्तावर्तक कर्णादिक (?C d कणा॰) सपात्याभिमन्त्र्य बध्नाति आज्यतन्त्रे। समाप्त गर्भाधान — su 12 अथ गर्भदृंहणमुच्यते। अच्युता द्यौरिति (see Kauç 98 2 where the hymn is given in सकलपाठ) — su 16 धाता दधात्विति चतसृभिर्गर्भिण्या (vi 17 1 4) उदरमभिमन्त्रयते। वीरकर्म समाप्त — su 17 अथ प्रजननकर्म। प्रजापतिर्जनयतीति सूक्तेन (su 19) — su 19

उदकुलिज सपातवन्त कृत्वा गर्भिणी परिहृत्य मध्ये निनयति। सुराकुलिज etc भक्त (.) सुरा प्रपा सपात्याभिमन्त्र्य प्रजाकामायै प्रयच्छति। समाप्त प्रजागर्भकम वन्ध्याया — su 20 अथ सीमन्तकर्म उच्यते। श्वेतपीतसर्षपान्सपात्याभिमन्त्र्य पुष्पाहान्ते बध्नाति — sū 21 अथ स्त्रीवशीकरणमुच्यते। वृबल्वक। तगर। शरखण्ड (Cod सरखण्ड)। अञ्जन। कुष्ठ। ज्येष्ठीमधु। वातसभ्रमतृणानि। एतानि द्रव्याणि आज्येनालोड्य अङ्ग समालभेत् इच्छार्थ — su 22 अङ्कुष्ठा तुदति भार्यामुदरे पृष्ठी इच्छार्थी — sū 23 एकविंशतिवदरीकण्टकानादधाति — sū 24 एकविंशतिदरीप्रान्तानि सूत्रेण वेष्टयित्वा — su 26 खट्वा अधोमुखपट्टिका गृहीत्वा स्वपिति। त्रिरात्र कर्म — su 27 (note 4) अर्द्धय छित्ते — su 28 समाप्तानि सवननानि वशीकरणानि कामविषये स्त्रियामुत्साहो भवति —

Kandika 36.

sū° 1 2 स्नापनविघ्नशमन (Cod स्नापन)। स्त्रीस्नापनकर्म उच्यते। अभ्यन्तरद्वारे शेषमुदक न्युञ्जति — sū. 4 स्त्रिया खट्वाया दक्षिणपादमभिमन्त्रयते। खट्वाया रज्जुमभिमन्त्रयते। स्त्रीस्नापन पुरुषस्य विषये काम उत्पद्यते कामविषये स्त्रीस्नापन समाप्त। लज्जाप्रच्छादन लज्जा भवतीदर्थ। स्नापन सर्वेषा मानुषाणा निद्राकामाना। मैथुनमाचरतो विघ्न न भवति — sū° 5 6 अथ पलायिन्या स्त्रिया बन्धनकर्म तन्त्रक्रमेण क्रियते। रज्जु(?) कल्पते तद्रज्जुवेष्टनमुच्यते। अस्माद् यौरस्मादिति द्वितीयेन सूक्तेन (६ 77) रज्जुवेष्टनमभिमन्त्र्य वशाये बद्धा मध्यमस्थूणे (Cod स्थूरणे) बध्नाति — sū 7 शय नपादमभिमन्त्र्य उत्पले बध्नाति — sū. 9 अङ्कुशेन तिलाञ्जुहोति — sū 10 जायापत्योरक्रोधकरणमुच्यते — sū 12 सौभाग्यकरणमुच्यते। शङ्खपुष्पीमूलमोषधि-त्वाला बध्नाति। सौवर्चल्पुष्पमभिमन्त्र्य यस्य सौभाग्यमिच्छति तस्य पुष्पमभिमन्त्र्य तस्य शिरसि बद्धा। सौवर्चल सूर्यवेलेति प्रसिद्धा — sūs 13 14 दुष्ट स्त्रीवशीकरणमुच्यते। रथजितामिति सूक्तैस्त्रिभिर्माषानभिमन्त्र्य स्त्रिया क्रमेषु वपति। चणकान् वपति। खट्वास्थाने वा गृहे शयनदेशे वा शरभृष्टीरादीप्ता अभिमन्त्र्य प्रतिदिशमभ्यस्यति। एषु पतिमतिकृति कृत्वा हृदये विध्यति दार्भेषेण भाङ्क्ष्येन। समाप्तानि पतिद्वेषिणीकर्माणि। पुरुषो वा स्त्रीणा द्वेष करोति। अनेन कर्मणा शान्तिर्भवति — sū 15 अथ स्त्रियो वा पुरुषस्य वा दौर्भाग्यकरणमुच्यते।

दहनघातिता गौ अनुस्तरणीत्युच्यते। ईशानहता ज्वरहतेत्युच्यते। तत उलूखलदरणे त्रिशिलं निखनति तत उलूखले ददाति। उपरि यस्य दौर्भाग्य क्रियते तस्य एतानि गृह्णीयात — sū 16 स्त्रीपुष्पमाला पिष्टा अन्वाह — sū 17 कृष्णसूत्रेण वेष्टयित्वाभिमन्त्र्य व्यत्यास अश्मान (Cod आश्मन) शालाया उपरि ददाति। व्यत्यासेन निखनति दौर्भाग्यकर्म' — sū 18 अथ तस्या सौभाग्यकरणमुच्यते। य ते भग निचखुरिति शिला उत्खनति उत्पादयति। भगमस्या इत्यनेन सूक्तेन यत्कृत तदनया विनश्यति। समाप्त यस्या दौर्भाग्य कृत तस्या सौभाग्यकरण — sū 19 अथ सपत्नीजयकर्माण्युच्यन्ते। सपत्नीविद्वेषण बाणपर्णी मासिका लोके प्रसिद्धा — sū 22 अथ स्त्रीविषये काम उत्पन्ने कामविनाशकान्युच्यन्ते। यस्मिन्देशे काम उत्पन्नस्तत्स्थान यावत् स्त्री वा पुरुषो वा व्रजति — sū 25 स्त्रीविषये ईर्ष्या विनाशकान्युच्यन्ते। ईर्ष्यालु दृष्ट्वा जपति। सक्तुमन्थमभिमन्त्र्य ईर्ष्या-

लुकाय ददाति भक्षार्थं — su 26 ईर्ष्यालुकस्य कटिप्रदेशे खल्वामभिमन्त्र्य (?) धमति — su 28 अथ मन्युविनाशकान्युच्यन्ते स्त्रीविषये पुरुषस्य।. मन्युमन्त पुरुष दृष्टाश्मानमभिमन्त्र्य हस्तेन गृह्णाति — su 29 अश्मान भूमौ निदधाति — sū 31 मन्युमत पुरुषस्य छायाया धनुरभिमन्त्र्य सज्जं करोति — su 32 अथ सर्वविषये मन्युविनाशकान्युच्यन्ते। दर्भमूलमौपधिवत्खात्वा सपात्याभिमन्त्र्य बध्नाति मन्युके — sū 33 अवीरजननमुच्यते। अपुत्रजननमित्यर्थं। अये जातानिमृचा अश्वतरीमूत्रेण पाषाण निघृष्य ततोऽभिमन्त्र्य भक्तेन सह ददाति। अलंकार समालभते। विद्वेषण परस्य। अथ वन्ध्याकरणमुच्यते। प्रान्यानिति तृचेन अश्वतरीमूत्रेण etc — sū 31 समाप्तानि विद्वेषणानि परस्त्रीवन्ध्याकरणानि — su 35 जारोच्चाटनमुच्यते — su 37 पाषाणमभिमन्त्र्य जारमैथुनस्थाने प्रक्षिपति उच्चाटनार्थं — sū 38 पुरुषस्त्रिया सह परस्पर विद्वेषणकरणान्युच्यन्ते। बाणापर्णी लौहिताजाया द्रप्सेन सनीयाभिमन्त्र्य शयनमुपरि किरति (cf su 19)। स्त्रीपुरुषस्य उभयरुचिविनाशकरण — su 39 अथ दौर्भाग्यकरणमुच्यते। हृदय मुख वाभिमन्त्रयते परस्त्रियै — Keçava ends the adhyaya as follows समाप्तानि स्त्रीकर्मकरणानि। तत्र भद्रश्लोक।

भैषज्यकर्माणि प्रोक्तानि सर्वव्याध्युपशान्तये।
स्त्रीकर्माणि तत पश्चाच्चतुर्थं संहिताविधौ॥ —

## Adhyaya v

### Kandika 37

Introduction अथ विज्ञानकर्मणा विधि वक्ष्यामि। लाभालाभजयपराजयसुखदु खोत्कर्षापकर्षसुभिक्षदुर्भिक्षक्षेमाक्षेमभयाभयरोगारोगा। वसो ऽस्तीति न वेति। धनाधनधर्माधर्म मरणामरण। धान्य भविष्यति न वेति। क्षेत्र भविष्यति न वेति। गृहे वासो भविष्यति न वेति। धान्यपुत्रपशुहिरण्यसम्पत्स्वानि च। विद्याशास्त्रादिलाभो भविष्यति न वेति। जीवितमरणे गमनागमने बलाबले। सदसद्योगाद्व्याधितस्य जीवितमरणाभ्या। प्रसवे पुत्रयोगात् पुत्रे जाते धर्माधर्मसयोगात् मित्रामित्रसयोगात्। ग्रामो ऽस्ति वा न वेति। पुरुषस्य विवाहो ऽस्ति वा न वेति। सवत्सर मासे वा भविष्यति सुभगा वा दुर्भगा वा। गृह ग्रामादि भविष्यति न वा। आधान भवेन्न वेति। इत्यादि मनसा वाचा वा सचिन्त्य तत्कर्म कुर्यात् — su। राध्यमान चौरौदनमभिमन्त्र्य तत

आमिश्चेत् । मनसा चिन्तयेत् । वाचा चिन्तयेत् । ओदन घृत भवेदमृत वा भवेत् । यदि यथाचिन्तित भवति तदा तस्य कर्मसिद्धिर्भविष्यतीति जानीयात् । इध्ममुपसमाधायाभिमन्त्र्य आयाचेत् उत्कुर्चनाय ।

दर्भस्तम्बमभिमन्त्र्य आयाचेत् यत्र सम विषम नानार्थसिद्धि । पूर्वेद्यु पाठमभिमन्त्र्य आयाचेत्। पचाणा पचाणा सकोचनेनार्थसिद्धि — अग्नयो यन्तीति सूक्तेन सग्रामे पूर्वेद्युर्वेदि कृत्वा अभिमन्त्र्य द्वितीये ऽहनि समविषमेण भाविन सिद्धि — u 3 पञ्चर्यापिवेणदण्डमभिमन्त्र्य आयाच्य समे धारयति। अभीष्टदिशि पतनेनार्थसिद्धि । इषु सधाया भिमन्त्र्यायाचेत् चिन्तित (Coa चितित) प्रक्षेपणनाय। कुम्भे उदकपूर्ण दुग्ध प्रक्षिप्यायाचेत् जनाधिकेनार्थसिद्धि यथा चिन्तित तथा सिद्धि । कमण्डलुमुदकपूर्ण दुग्धमाक्षिप्याभिमन्त्र्यायाचेत् जनाधिकेनार्थसिद्धि । दर्भस्तम्बमभिमन्त्र्यायाचेत् । काम्पीलशाखा मूर्ध्नि धारयित्वाभिम न्त्र्यायाचेत् इष्टदिक्पतनेनार्थ । युगमभिमन्त्र्यायाचेत् । धा न्यमभिमन्त्र्यायाचेदग्नौ प्रक्षिपेत् प्रदक्षिणज्वलनेनार्थ । हस्तयोर ङ्गुलिद्वयमभिमन्त्र्यायाचेत् । अज्ञातस्य वेनस्तदिति सूक्तेन एकविंश त्या () शर्करा अभिमन्त्र्यायाचेत् धनेनाथ समविषमभावेन यथाव तार्थ (') — su 4 अथ नष्टद्रव्यपरीक्षणे क्रियमाणे इद कर्म। वेनस्तदिति सूक्तेन — u 6 वेनस्तदिति सूक्तेनाहतेन वस्त्रेण वेष्टित हस्त सपात्याभिमन्त्र्य येन हरेत् ततो नष्ट । अश्वा( कुश्रवत्कृत्वा सपात्य येन हरेता ततो नष्ट । समाप्त नष्टद्रव्यप रीक्षणे विधान — su 7 अथ कुमारीविधानमुच्यते । वेनस्त दिति सूक्तेन — sū 11 वेनस्तदिति सूक्तेन कुमारीमुदकाञ्जलि पूर यित्वाभिमन्त्र्य — su 1 समाप्त कुमारी () विवाहकाले विधान —

## ka d ka 3

Introduct on अथ नैमित्तिकान्युच्यन्ते — 1 1 दुर्दिनविना शकमणा विधि वक्ष्याम । दुर्दिनमभिमुखमुपतिष्ठते सर्वत्र दुर्दिनवि नाशकानि — ⁿ प्रत्युषमुदक प्रक्षिपति — इन्द्र गृहीत्वोपतिष्ठते अभिमन्त्र्य उल्मुक गृहीत्वोपतिष्ठते सूर्यस्याभिमुख । लकट गृहीत्वोपतिष्ठते उन्मत्तानो अकमुखा भूत्वोपतिष्ठत u 6 पटरकसमिध ( अर्कसमिध आदधाति स्थण्डिले —

खदा खात्वा खदा चि परिक्रम्यार्का लुञ्चित कृत्वा खदाया प्रति पति सूक्तान्त। तत पासुना खदा पूरयति। वृष्टिनिवारण समाप्त —

su 8 अग्निनिवारण कर्म वक्ष्याम । च्चग्न्यभिमुखमुपतिष्ठते —
sū. 9 एतत्कर्म चेचे । अग्निनिवारण ।
अतिवृष्टिरनावृष्टि शलभा मूषका शुका ।
स्वचक्र परचक्र वा सप्तैता ईतय स्मृता ॥ —
sū 11 अवदीर्यमाणे ग्रामे वावसाने वाग्निशरणे वा सभाया (Cod समय्या) वा गृहे वा प्राकारे वा वातरचार्थ कर्म वक्ष्याम — sū. 12 पत्तने रचार्थान्युच्यन्ते — sus 13–16 The rites described in these sūtras are valid for the दृहणानि as well as the दृतिकर्माणि Is दृतिकर्माणि at Kanç 38 12 to be emended to दृढिकर्माणि? In describing the latter Keçava ends as follows समाप्तानि दृढकर्माणि गृहपत्तने ग्रामपत्तने कार्यदृढकरणे अवहरणरचार्थ — su 17 विवादे जयकर्मणा विधि व्याख्यास्याम । ज्येष्ठीमधुमभिमन्त्र्य (!) भचयति । तत सभा प्रविशति अपराजितादिशात् । पर्यज्जयकर्म सभाजयकर्म समाप्त — su 18 विवादे जयकर्माण्युच्यन्ते । पाटामूल मुखे प्रचिप्य तदनन्तरमपराजिताद्दिशादागच्छति — su 19 पाटामूल मुखे प्रचिप्यान्वाह — su 20 पाटामूल बध्नाति — sū. 21 पाटापुष्पमालामभिमन्त्र्य शिरसि धारयति । पाटापालाशी सप्तपलाशी (!) सप्तपर्णी (!) मालामभिमन्त्र्य धारयति — sū 22 वृष्टिनिवारण भचभोजने कर्म उच्यते । भक्तमभिमन्त्र्य भक्त शाकादि (Cod भक्त°) ततो भुञ्जीत । वृष्टिनिवारण समाप्त — sū 23 ब्रह्म जज्ञानमिति सूक्तेन प्रथमेन काण्डादिना सूक्तेन वेद वा अनुवाक वा सूक्त वा कल्प वा ब्राह्मण वाध्ययन कर्तुमिच्छति तदा-तदा सूक्त जपित्वा तत अध्ययन कुर्यात् । कलहशमन समाप्त — sū. 24 ब्रह्म जज्ञानमिति सूक्त जपति विवादे जयार्थ — sū 25 ब्रह्म जज्ञानमिति सूक्त जपित्वा मीमासव्याकरणादिशास्त्रवाद करोति तदा जपित्वा करोति प्रतिवादिन जयति — su 26 विवादकर्म उच्यते । चाक्रिकस्य रज्जुमभिमन्त्र्य धारयति हस्तेन इति विवादकर्म कर्तुर्वदने कलहो न भवति — sū. 27 सभाजयकर्माण्युच्यन्ते । सभास्तम्भन कर्म जयकर्म तदा सभासद्धर्माधिकरणादि जायते । चीरौदन etc. भचयति — sū. 29 यद्वदामीति ऋच जपित्वा सभा वदेत् । निरीचते । • अन्वाह । यद्वदति तच तथैव वदति यचचुषा पश्यति तद्वदन् विघातो न भवति —

## Kaṇḍika 39

sū 1 तिलकमणि सपात्याभिमन्त्र्य पुण्याहान्ते बध्नाति । आत्मरचार्थमणि । सर्वच प्रत्यभिचरणार्थो मणि बध्नाति . —

sū 5—12 तत शान्त्युदक करोति महाशान्तिधान मातलीवर्ज कृत्वा दूष्या दूषिरसीति कृत्वा प्रतिहरणो गण । ततो वास्तोष्पत्यमातृनामचा तनशान्तिगणे (१) एते पञ्च गणा (cf Kauç 8 23—9 6) शान्त्युदकेन आवाप्यन्ते । ततो मातली कृत्वा शान्त्युदकभाजने चित्वाद्या (cf Kauç 8 16) आदधाति । मन्त्रोक्ताया दर्भापामार्गसहदेवीशाटरूपककाम्पील शितीवारसदपुष्पा एता मन्त्रोक्ता भाजने एता ओषधी शान्त्युदके अवधाय तत शान्त्युदक करोति (Kauç 9 8)। तेन शान्त्युदकेन प्रोच व्रजति अतो रात्री इद कम प्रमाणक करोति । उपानहौ परिधाय उष्णोष कृत्वा अग्रे भूत्वा कता शान्त्युदकेन प्रोचति कृत्यास्थान यावत् बालागमपांचेषु कृत्यादिषु च सर्वेष्विद कर्म भवति । अभिचचषु () यदि कृत्या दृष्टा भवति ततो वक्ष्यमाण कर्म करोति अथ न भवति तदा कुर्यात् । एव बालागपांचेषु कृत्यादिषु सर्वेष्विद कर्म भवति । अभिचचक्षुषा इत्यनेन मन्त्रेण कृत्या (Cod कृत्वा) निरीचते । स च निरीचते । कृतव्यधनि इत्यृचा कृत्यास्थान अवेचते । कृतव्यधनि इत्यृचा कता काण्डेन विध्यति आ ङ्गिरसकल्पविधानधनुषा । अथवा दभ्र्युषेण () काण्डेन विध्यति — sū 15 मासानि शकले निधाय कर्ता सदृश गृहीत्वा चर्मणि बद्धा प्रिपकृत्य रिक्रम्य बन्धाद्गुप्यति — sū 18 नवनीतेनाभ्यज्याचिणी वा अङ्क्ते — sū 20 अरणे गच्छन्ति — su 27 वास्तोष्पत्यादयश्चत्वारी गणा (cf under su 5 12) उर्ध्वं पठन्ति — sū 28 कता अभिचा रकृतपुरुषस्य शान्त्युदकेन मर्माणि (C 1 क॰ सप्रोचति । गार्हपत्यसभा-आमपात्रकूपकुकुटइत्यादीनि cf 1 1 1—4) मर्माणि (Cod क॰) मप्रोचति — su. 29 कृत्यास्थान कृष्णवृषभहलेन कर्षति —

## Kand ka 40

sū 1 अथ नदीप्रवाहविधि वक्ष्याम । नदीप्रवाह खात्वा प्रसिञ्च व्रजति — sū 2 काशमभिमन्त्र्य तत्र खाते रोपयति । द्विविसे वालपर्णमभिमन्त्र्य (for °शैवाल°?) रोपयति नदीप्रवाहे । वेधूकपाटरक (to °पटेरक?) अभिमन्त्र्य नदीमार्गे निखनति । वेतसशाखामभिमन्त्र्य नदीप्रवाहने (!) निखनति — su 6 उदक मण्डूकस्योपरि निनयति — su 7 पूर्वप्रवाहो न भवति अथ नवधा प्रवाहे इद कर्म कुयात् । वरुणदे वतात्पाकयज्ञविधानेन आज्यभागान्त कृत्वा यदद सप्रयतीरिति सूक्तेन चिरविभज्य जुहोति । तत उत्तरतन्त्र । कृष्णव्रीहि कृष्णाया गो पय घृत च वेतसकाष्ठासु च इन्धन । वेतसपत्रे सरण पटेरकेण वा अग्निरन्ते() सव मारुत कर्तव्य । उदकप्रवाहे उदकप्रवाहभये नदीभये ग्रामे नगरे

वा । यत्र उदकनदीभय भवति तत्र सर्वत्र वारुणो होम कर्तव्य — su 9 बलि हरेत् तत ऋति धन्वानोति द्वाभ्या न भवति मन्त्रोदक नदीप्रवाहे प्रमिद्ध-व्रजति । समाप्त नदीदूरगमनकम — su 10 यदि न वहति नदी तदा वक्ष्यमाणमिद कर्म। यदद सम्प्रयतीरिति नदी हन्ति। वेतसशाखामभिमन्त्र्य नदीमवसिञ्चति। यदि दूर गता पुन निवर्तते तदा इद कर्म एके आचार्या । यदद सम्प्रयतोरित्यादि सर्वमेक कर्म मन्यन्ते। अन्ये भिन्नानि कर्माणि मन्यन्ते । अन्ये प्रमिद्धनकर्म हिरण्यमण्डूककम योगकम मन्थनकर्म पाणिकर्म एतेषा विकल्प मन्यन्ते । समुच्चयो वा इति दारिलमत समुच्चय । समाप्त अन्यप्रवाहे नदीकम — su 11 12 अथ अरणिसमारोपणकर्म। अरणिद्वय प्रतापयति पाणी वा प्रतापयति। उत्थाय वा गृह्णाति। ततो ऽनेन विधानेन पथि गच्छता दोषो न भवति — su 13 अथावरोहणमुच्यते. — sus 14 15 पुरुषस्य वीर्यकरणे विधि वक्ष्याम । कपिकच्छुमूलमोषधिवत्खात्वा सुरवालकमोषधिवत्खात्वा . दुग्धे अर्पयित्वा उपविष्ट धनुरुत्सङ्गे कृत्वा . दुग्धमभिमन्त्र्य पाययति — sū 16 Keçava divides this sutra in his treatment so as to join the words मयूखे मुसले वासीनो to the preceding practice, to wit या खित्यूचा सुरवालक दुग्धे क्वाथयति पीत्वा कीलके उपविश्य पिबति कपिकच्छु मुसले उपविश्य . पिबति। मूकरवालक मुसले उपविश्य . पिबति Then a new practice is introduced with the words शिश्नस्य स्थूलकरणमुच्यते, as follows यथासित इति सूक्तेन एकशाखार्कमणि सपात्याभिमन्त्र्य अर्कसूत्रेण बध्नाति — sus 17 18 यावदङ्गीनमित्यृचा कृष्णमृगचर्ममणि बध्नाति। आ वृषायस्वेति सूक्तेन हरिणम्लान्धचर्ममणि कृत्वा कृष्णवालेन बध्नाति।. वीर्यकरण उत्थापन स्थूलकरण च भवति रेतोनाशे च —

Kaṇḍika 41

su 1 अथ वृष्टिकर्मविधि वक्ष्याम — sus 2 3 त्रयोदशे ऽहनि पाकयज्ञिक तन्त्र व्रतोपायनान्त कृत्वा ततो देवस्य त्वा सवितुरित्यादि मरुद्भ्यो जुष्ट निर्वपामि मरुद्भ्यस्त्वा जुष्ट प्रोक्षामीति अनेन यजुषा तावत्समान यावदाज्यभागौ तत चोरोदन जुहोति । समुत्पतन्त्विति सूक्तेन पञ्चभिर्ऋग्भिरेकामाहुति तत पञ्चभिर्ऋग्भिर्द्वितीया षडिभस्तृतीयामाहुति जुहोति।तत पार्वणादुत्तरतन्त्र। पाकयज्ञिक तन्त्रमाज्यभागान्त कृत्वा तत प्र नभस्वेति चोरोदन एकामाहुति जुहोति। न घ्रस्ततापेत्यृचा

(viii 18 2) द्वितीयामाहुति। युक्ताभ्यां तृतीयामाहुतिः पार्वणाद्युत्तरतन्त्र वर्हिर्होमं मरुतो गच्छतु हवि स्वाहेति। सर्वेषु वृष्टिकर्मसु कृष्णाया गोराज्य कृष्णाया गो पय कृष्णा व्रीहियालय वेतसस्रुव वैतसी समिदिन्धन च — sus 4 काशादिविधुवकवेतसामिकाच(?) कृत्वा तत उदकमध्ये पाच अधोमुख निनयति। उदके विस्रावयति — su 6 कुक्कुरशिरसमभिमन्त्र्य उदके विस्रावयति। मेषशिरसमभिमन्त्र्य उदके प्रक्षिपति। मानुषकेशजर दुपानहौ(?) वंशाग्रे प्रबध्य योधयति जपन् — su 8 अथोत्थापने विघ्नशम नविधि वक्ष्याम। अर्थकामोद्यम यदा करोति तदा इद करोति। द्रव्यहस्त्यश्वरत्नहिरण्यधनधान्यादि एवकामो यदोद्यम वणिजादि करोति तदा इद कर्म करोति। यस्मिन्नारब्धा गृहादि न सिध्यन्ति तदा इद कर्म — su 10 अथ द्यूतजयकर्म उच्यते — su 11 उत्तराषाढनक्षत्रे समिनोति (Cod सभि°) पूरयति — su 13 चयो दक्षादयस्तिस्रो दधिमधुनि वासयित्वा (Kauç 7 19) अचान्वा कपर्दकान्वा द्यूत क्रीडा कुर्यात् — su 14 अथाथोत्थापनोद्यमकार विघ्नशमनकर्म उच्यते। मरुतो यजते पाकयज्ञविधानेन यथा वरुण मारुत चोरौद्रन मारुतसूक्तमित्यादि भवति (cf su 3 fg These performances as well as those following now are performed with each of the pratikas mentioned in su 14)। एवमाद्या ओषधी सपात्य अभिन्युञ्जन। विस्रावयति। अशिर एडकशिर केशजरदुपानहौ युद्धउदपात्रकर्म (cf su 6) एतानि अभिवर्षणानि कर्माणि भवन्ति एकैकस्य सूक्तस्य। एके आचार्या मारुतस्थाने मन्त्रोक्तदेवतायाग कुर्यात् यथा वरुण। अर्थाष धिहोमसमान वर्षकर्मणाम् । उदकघट सपात्याभिमन्त्र्य तत आस्रावयति। अवसिञ्चति (both performances are again prescribed with all the pratikas cf su 14) विघ्नशमनकाम। समाप्तानि अभिवर्षणावसेचनानि कर्माणि — su 15 वैश्वानरो रश्मिभिरिति सूक्तेन उद्देहि वाजिन्निति विशत्या अभिमृश (xiii 1 1—20) उद्यन्तमादित्य स्नान कृत्वोपतिष्ठते अर्थमुत्थापनकाम — su 17 वस्त्र ददाति। विद्रावणादिविषये शमनकाम। समाप्तानि विघ्नशमनकर्माणि — su 18 अथ गोवत्सद्वेषोविरोधसामनस्यमुच्यते — su 19 ततो वत्स चि परिभ्रामयित्वा पानार्थ मुञ्चति — su 20 गवा वत्सेन सह विरोधि वत्सगोविरोधिसामनस्यकर्म(?)। समाप्त गोवत्सस्य विरोधे सौमनस्य। अकरणे गा पूर्वा विनश्यति अथ गोवत्स तदा राजा प्रश्न — su 21 अथशान्तिविधि वक्ष्याम। अश्वा शान्तास्तेजस्विनो निरुपद्रवा वेगवन्त आरोग्या भवन्ति —

Kandika 42

su. 1 अथ प्रवासनद्रव्योत्थापनमुच्यते। प्रवासे गत्वा चौरभय उदकभय गमनविघ्न न भवति। हविर्यामुपधानं कुर्यात् — su. 3 यदि यानेन याति तदा इदं कर्म — su 4 वाणिजद्रव्य वस्त्राश्वादि सर्वद्रव्य विक्रयार्थं नयति। यदा द्रव्य गृह्णाति तदा इदं कर्म — su 6 अथाभ्यागतपुरुषाणा सामनस्य क्रियते। यदा विशिष्टो गृहे आगच्छति तदा इदं मित्रीकर्म क्रियते। मित्र लेषा दर्शने आगताना। यदा गृहे आगच्छति तदा इदं कुर्यात् — su 7. हस्त्यादियान सपात्राभिमन्त्र्य तस्मिन्याने यस्य सामनस्य क्रियते उपरि उपविशन्ति। सर्वे यानस्योपरि चटन्ति तत पश्चिमदिशि गत्वा पुनर्गृहे आगच्छन्ति। तत ओदनमभिमन्त्र्य सह भुञ्जन्ति अन्य वा। समाप्त सामनस्य। एकस्मिन्युद्धे क्रियमाणे सहागतस्य कर्म इद कर्म अन्यस्य च साधारणमित्यर्थः। यो युद्धे साहाय्यत्व करोति तस्येद कर्म। प्रथम पादो प्रवाल्य तत कर्म चेति। चत्रिययोरिद कर्म मन्यन्ते केचित् — su. 8 अथ गृहे विरुद्धे सति सामनस्यमुच्यते। कर्तारस्मै गत्वा समिधो गृहीत्वा तूष्णी गृहमागत्य गृहमनुप्राप्ता सामनस्य भवति कलहनिवारण — su. 9 अथ मन्त्रब्राह्मणयोर्द्रव्यमिच्छति तस्येद कर्म प्रतिगृहादि उच्यते। वेदपाठेन शास्त्रपाठेन अर्थोत्थापनमिच्छन्निद करोति। समाप्त वेदेन अर्थोत्थापने विघ्नशमन — su. 12—17 अथ परिमोच विधि वक्ष्याम। गोदानिकतन्त्रमाज्यभागान्त कृत्वा तत शान्त्युदक कृत्वाभिमन्त्रयते। अपो दिव्या इति चतसृभि। ततो ऽध्यातानादि परिदानान्त कृत्वा। केचित्परिदानान्ते ततो ऽभ्यातान कुर्वा। तत इद्रावत्सरायेति कल्पजैयतसृभिर्ऋग्भिराज्य जुहुयात्। समिध आदधाति। वेदव्रत कल्पव्रत मृगारव्रत विषासहिव्रत यमव्रत शिरोव्रत अङ्गिरोव्रत इत्येव मादिषु (cf Kauç 57 32 note). इद्रावत्सरायेति व्रतविसर्जन व्रतश्रावण च करोति। यत्र क्वचिद्व्रत वैदिक लौकिक च तत्र सर्वत्र व्रतादान व्रतविसर्जन च भवति विधानेन। शिरोव्रतादीनि नित्यानि . कृच्छ्रचान्द्रायणादीनि काम्यानि स्मृतिपुराणशास्त्रवेदविहितानि .. तानि सर्वाण्येतेन विधानेन कर्तव्यानि — su. 18. परिमोचानन्तर त्रिरात्र स्नानव्रत चरेत् . — su 19 अथ पापलक्षणा स्त्री तस्या. शान्तिरुच्यते। स्त्रीमुख प्रत्युच प्रचालयति तस्या मुख हस्तयोर्मेषकश्रियुकशिरकौ(?) अस्थानतिलक हस्तकेशादिपापलक्षण सामुद्रिके स्त्रीलक्षण व्याख्यात। . स्त्रिय पापलक्षणामभिषिञ्चति दक्षिणात्केशादारभ्य यावदुत्तरपार्श्व तत. पापलक्षण विनश्यति — su. 22 अथ पापदर्शने शा-

न्निरुच्यते दर्शनदोषो न भवति। पुरुषस्य भाण्यकाले हरिणा यान्ति प्रदक्षिणा अप्रदक्षिणेषु हरिणेषु अय जप पठितु च। श्वानरुदिते काकरुदिते काकमैथुनेषु पुरुषस्य मैथुनेषु श्वेनमैथुनदर्शने नग्नस्त्रीदर्शने नग्नपुरुषस्य नपुंसकस्य दर्शने यत्र क्वचिदपशकुना पतिता तत्र सर्वत्राय जप । शुचौ स्मृतौ पतिता अदृष्टव्यास्तेषा सर्वेषा दर्शने अशु ताना दर्शनेष्वय जप कर्तव्य । लोके यद्विरुद्ध अन्योन्य अय जप । अपशकुनजप समाप्त — su. 23 अथ पुरुषहवे अकार्यकरणेन विघ्नश मनकर्म उच्यते —

Kandika 43

su 1 पुनर्विघ्नशमनमुच्यते। पिशङ्गवर्णसूत्रे बद्धा अरलु मणि सपात्याभिमन्त्र्य बध्नाति। विस्कन्धविघ्नशमनो मणि । स्पर्ध मानस्य स्पर्धा विनश्यतीत्यर्थ। वेणुदण्डादीन्सपात्य तत सूक्तेन विमृज्य धारयति । चित्रदण्डे ध्वजदण्डे चिह्नदण्डे लकुटा दिदण्ड सर्व सपात्य धारयति तस्य सर्वमृद्धिदग्धादिविघ्न न भवति। । आयुध सपात्याभिमन्त्र्य विमृज्य सूक्तेन धारयति । सर्वशस्त्र सपातिते मायादिक मायाजालयुद्धे निवारण सग्रामे इन्द्रजालनिवारण युद्धे विघ्न न भवति शत्रुहव निवारयति। शत्रवो गच्छन्ति। स्पर्धमान शत्रु जयति हव विनाशयति — su 2 विघ्नगृहीत पुरुष धूपयति यस्य आरम्भा न सिध्यन्ति — su 3 अथ भूमिशुद्धि गृह करिष्यमा णास्तस्येद् करोति। Then Keçava exhibits e se ually the same text as the Ath Paddh erding with the foll wing अथवा नवे गृहे श्येन याग कर्तव्य विकल्प इति भाष्यकार । प्रथमतो वा श्येनयागो नवे वा गृहे — su 4 अथ गृहप्रवेश उच्यते। वास्तुसस्कार उच्यते — su. 5 तत शान्त्युदक करोति। मातली पूर्व कृत्वा वास्तोष्पत्यादीनि च तुर्गणो महाशान्ति शान्त्युदके आवपति। ततो मातल। कृत्वा तत शान्त्युदक समाप्यते(cf Kauç 8 23 fg)। तेन भूमि प्रोक्षयेत् — su. 7 अन्येषु स्थूणा गर्तेषु पर्श्वे स्थितेषु प्रक्षिपति — su ९ नीयमाना (!) शालामनुम न्त्रयते — su 11 दृढा कारयति शालाभूमि — su. 13 द्वाभ्या चरू जुहोति । केचिद्ग्निस्त्वे (!) यजूषि यज्ञ इति etc. as at Kauç 23 1 fg — su 15 वृद्धस्त्रियो गीतमङ्गल्यादि कुर्वन्ति ब्राह्मणा पुण्या हानि पठन्ति श्राद्ध च केचित्प्रथमत्कुर्वन्ति। यत्र गृह मण्डप वा कुटी वा चित्रशाला वा मठस्थान वा देवगृह वा अन्य वा तृणमय वा काष्ठ मय वा इष्टकामय वा पाषाणमय वा गृहादिक करोति तत्रान्ति विधा नेन वास्तुयाग कर्तव्य — su 16 अथ क्रव्यादोपहतगृहे क्षेत्रे वान्यत्र गोष्ठे वा

यत्र क्वचित्तत्र शान्तिरुच्यते   क्रव्यादा प्रविष्टे गृहे कुमारा म्रियन्ते वत्सान् (!) वा किशोरान् (!) वा   धननाशो यत्र भवति तद्गृह ग्राम नगर वा क्रव्यादोपहत जानीयात् — su 18 पालाशसमिध आदधाति — su 19 कुमारवत्सगोमरणादि धनधान्यविनाशादि चित्तोद्वेगादि क्रव्यादचिह्नानि। क्रव्यादोपहतशान्ति समाप्ता — su 20 अथ क्रव्याच्छमनविधानमुच्यते ।   लौकिके वाग्नौ गृहे वावसथ्ये वा शान्तिकर्पौष्टिकार्थं मन्थने वा यत्र वा क्रव्यादोपहतिदृश्यते तत्र सर्वत्र कुर्यात् — su 21 अथ वशाशमनविधानमुच्यते। ये अमय इति दशर्चेन सूक्तेन वशामभिमन्त्र्य ततो ब्राह्मणाय ददाति। यस्य गृहे वशा भवति जायते तद्गृह दैवहत विजानीयात् —

Kand k ı 44

sū 1 अथ वशाशमनविधानमुच्यते — su 3 शान्त्युदक करोति अन्वारब्धाये वशाये काष्ठेन तृणेन वा — sū 5 आतस्मन्तेन (xı 6 23) शान्त्युदकेनाचामयति च सप्रोक्षति च — su 6 वशा कर्ता ऊर्ध्वस्थित वास्तोष्पत्यादिचतुर्गणो महाशान्ति (cf Kauç 8 23 fg) उच्चैस्तृतीयसवने जपति वशामभिमुख स्थित — su 14 समस्येति() मन्त्रेण भूमौ कृत्वा तत उपरि वशा पातयति — su 15 निरुच्छ्वास करोति मारयतीति — su 17 यद्दशेत्यृचा कल्पजया आज्य जुहोति — su 19 इति कर्ता ब्रूयात् — su 28 शेषमुदक पार्श्वदेशे निक्षिप्य ततो ऽभ्यन्तरे प्रविश्य — su 36 छेदनस्थानमभिघार्य —

Kandka 45

su 3 अवदानानि पशोरेकादश गृह्णाति — sū 4 तत स्विष्टकृदवदानानि गृह्णाति तानि त्रीणि दक्षिणो बाहु वामजङ्घा च अन्त्रविभाग। एतानि त्रीणि भागानि — su 6 ततो यद्दैवत्य पशुस्तद्दैवत्यचरु श्रपयितव्य — su 12 वपाग्रपर्श्वौ द्वे सह जुहोति — sū 13 अथ पित्र्येषु काम्येषु विशेष — su 16 समाङ्किति मन्त्रेणाज्य जुहोति। सर्ववीरायेत्यादि पतस्र आहुतीर्जुहोति।   समाप्त वशाशमनविधान। दैवहत तस्य गृह यस्य गृहे वशा जायते तस्य धनादिनाशा भवति तस्माच्छान्ति कर्तव्या — su 17 अथ दुष्टे प्रतिग्रहे *सोम्ये वा कृते वाजने वा दक्षिणाप्रतिग्रहणे येन कर्मणा पाप विनश्यति* तदुच्यते।   प्रतिग्रह   प्रतिगृह्णाति। प्रतिग्रहदोषो न भवति — su 18 सर्वाणि कर्माणि कृत्वा पुनर्मैत्विन्द्रियमित्यृचा कर्म समाप्य तत आत्मानमनुमन्त्रयते। सर्वकर्मसु भवति। इत्यात्मशान्ति। सध्यावन्दने

आज्यतन्त्रे पाकतन्त्रे अस्मिन्कर्मणि नित्यनैमित्तिककाम्येषु पुनर्मैत्विन्द्रिय-
मित्यृचा आत्महृदयमनुमन्त्रयते — su 19 एतेन विधानेन पशवो
व्याख्याता नित्यनैमित्तिककाम्या . पैठीनसिना काम्या पठिता —

## Kandika 46

su 1 अथ अकृते पापे लोके पापवचनमुत्पद्यते तत्र शान्तिरुच्यते।
सक्तुमन्थ भक्तमभिमन्त्र्य ददाति। प्रथममग्रे कृत्वा अभ्याख्यात
गृहे प्रवेश्य कर्ता पश्चात्प्रविशति — su 2 द्रुघणमणि सपात्या
भिमन्त्र्य बध्नाति — su 3 पालाशकाष्ठमणि द्रुघणप्रतिरूप कृत्वा
अभिशस्ते बध्नाति। कृष्णलोहमणि ताम्रमयद्रुघणप्रतिरूपमणि
हिरण्यमणि द्रुघणप्रतिरूप बध्नाति। सर्वत्र कौशिके कर्मणा
विकल्प। एकस्मिन्विषये यत्र बहूनि कर्माणि पठितानि तत्रैक कुर्यात्स-
र्वाणि वा तत्रविकल्प — su 4 अथ यागे क्रियमाणे येन कर्मणा
विघ्नशमन भवति तदुच्यते। ऋत्विजो यजमानश्चाशयन्ति(¹) अविघ्नेन
यज्ञसिद्धिर्भवति — su 5 यागसमाप्तौ विघ्नशमनमुच्यते। सोमदैवत्य
चरु जुहोति — su 6 अथ धनधान्यादिप्रतिग्रहादियाचना-
मिच्छन्निद कृत्वा याचितविघातो न भवति। याचित न प्रतिषेध
यति। सारूपवत्स पायस सपात्याभिमन्त्र्याश्नाति — su 7 अथ कपोते
उलूके वा गृह प्रविष्टे अन्यत्राभीष्टदेशेऽपि तत्र शान्तिरुच्यते। शान्त्युदके
आवपते ततो मातली (४। 6 ) कृत्वा शान्त्युदक समाप्यते रात्रा तेन शा
न्त्युदकेन तत्स्थान प्रोक्षति यतार्थे इत्येतैर्मन्त्रै ... su 7 कपोतोलूक
स्थान यावत् — su 8 त्रि शाला परिणयति कपोतस्थान वा परिभ्रा
मयेत्। आरण्यके पक्षिणि प्रविष्टे इद कर्म कुर्यात्। कपोतोलूके वा
प्रविष्टे द्विपदचतुष्पदविनाशो वेदे श्रूयते तस्य दोषशमन — su 9
अथ स्वप्नाध्यायपठिते उग्रे स्वप्नदर्शने शान्तिरुच्यते। स्वप्नाध्यायपठितदु-
ष्वप्न रुद्रभाष्यकारमतेन गृहीतव्य(¹)। पक्वमासे प्रेतदर्शने परिष्वङ्गमर्कटे( )
दृष्ट्वा तैलाभ्यङ्गे नग्नपुरुषदर्शने नग्नस्त्रीदर्शने कालसूत्रेत्यादि( स्वप्नाध्याय-
पठिता अनेकश। इति दुःस्वप्नदर्शने शान्तिरुच्यते। स्वप्न कुत्सित
दृष्ट्वा मुख प्रक्षालयति — su 13 अथ पुनर्घोरदु स्वप्ननाशनकर्म
उच्यते। विद्म ते स्वप्नेत्येकेन पर्यायेण दु स्वप्न दृष्ट्वा मुख विमार्ष्टि।
पार्श्वेन द्वितीयेन भूयते। अन्न स्वप्ने दृष्ट्वा निरीक्षते। मैत्रधान्य
पुरोडाश जुहोति — su 14 अथ आचार्ये मृते ब्रह्मचारी इद करोति
श्रेयस्काम आचार्यदहने। अग्निर्भूम्यामित्यादि (su 1 19) पञ्च सामिधे
नीर्हुत्वा ततो दहन त्रिर्भ्रामयित्वा तत नहि ते अग्ने तन्व इति सूक्तान्ते

पुरोडाश जुहोति तस्मिन्दहने — su 16 कौशिकसूत्रे शयन न मन्यते च प्रेतादिभयात् तद्विघातशमनं — su 17 अपो दिव्या इति चतसृभिर्ऋग्भि स्नान कृत्वा त्रिरात्र गृहे आगत्य तत शयीत इति कौशिकमत। मृते आचार्ये इद कर्म प्रायश्चित्त कृत्वा तत समावर्तन कुर्यादित्यर्थ । अन्य गुरुमुपासीत — sū 19 अथ ब्रह्मचारी स्त्रिया मैथुनसयोगे इद करोति। स अवकोर्णीत्युच्यते (Cod साव°) तस्य प्रायश्चित्तमिदमुच्यते। ब्रह्मचारिण दर्भरज्ज्वा कण्ठे बद्धा — sū 22 अथ स्वयप्रज्वालिते ऽग्नौ प्रायश्चित्तमुच्यते — sū 23 अथ अग्निशब्दकरणे शान्तिरुच्यते। अग्निमुपतिष्ठते — sū 24 अथ सदेशे विस्मृते अग्निमुपतिष्ठते। यदि ग्रामे वा गृहे वा सदेश न कथयति तदा इद प्रायश्चित्त — sū 25 अथ पापनक्षत्रे जाते स्त्री वा पुरुषो वा यो जातस्तस्य शान्तिरुच्यते। तस्य मुञ्जरज्ज्वा कण्ठे पादे बद्धा तत प्रत्नो हीति सूक्तेन उदकघट सपात्याभिमन्त्र्य दर्भपिञ्जूलीघंटे प्रक्षिप्य ततो ऽभिषिञ्चति। ग्रीवापाश नदीफेनेषु निदधाति। नदीना फेनानित्यर्धर्चेन (vi 113 2ᶜ) कटिपाश उदकमध्ये प्रक्षिपति। मातृपितृभ्रातृषु दोषश्रवणात्। तस्मात्पापनक्षत्रेण शान्ति कर्तव्या। मूलनक्षत्रे इद कर्म क्रियते। यो नक्षत्रकल्पोक्त कर्म कुर्यात् तदुच्यते।.. प्रत्नो हीति सूक्तेन

क्षीरौदन सपात्याभिमन्त्र्याश्नाति।.. एतस्मिन्तन्त्रे (!) समूल बर्हि स्तृणाति समूलेध्मानुपसमाधाय एष विशेष । नक्षत्रकल्पोक्त । एषा नक्षत्रकल्पोक्ता शान्ति । आस्रवनावसेचने च क्षीरौदनप्राशन च एतानि त्रीणि। अथवा प्रत्नो हीति सूक्तेन उदकमभिमन्त्र्य पापनक्षत्रजातमवसिञ्चति शिरसि। एतानि त्रीणि कर्माणि भवन्ति — sū 26 अथ ज्येष्ठे भ्रातरि जीवति विवाह आधानदीक्षा च करोति तस्य शान्तिरुच्यते . — sū 28 उत्तरपाश नदीना फेनानित्यर्धर्चेन नदीफेने निदधाति। अधरपाश नदीमध्ये प्रक्षिपति।ततो बन्धन कृत्वा ततो ऽवसिञ्चति — su 29

अपा सूक्तैर्घट सपात्याभिमन्त्र्य तत आप्लावयति।. अवसिञ्चति। परिवित्तिपरिवेत्तृप्रायश्चित्त — su 30 अथ मृते आचार्ये इद कर्म — su 33 अथ देवपितृवर्जितरुद्राशयनिहितस्य अन्नस्य याच्ञाकेन ('for याजकेन) येन कर्मणा भवति तदुच्यते।. अनुवाकेन रुद्राशयादन्नादुद्धृत्य सेतिकामिका जुहोति — su 34 प्रायश्चित्त — su 35 रुद्राशयान्नसस्कारशान्ति समाप्ता — su 36 अथ मृते धनिके ऋणकस्य ऋणदानशान्तिरुच्यते। अपमित्यमप्रतीत्तमिति त्रिभि सूक्तैर्द्रव्यमभिमन्त्र्य (vi 117-119) पुत्राय ददाति। अनृणो भवति — su 41 आकाशोदकेन शरीरास्रवने दोषो भवति तस्य शान्तिरुच्यते — sū 42

द्विषो नु मा बृहत इति सूक्तेन एकतैल सर्वौषधिगन्ध हिरण्य वा एतान्यभिमन्त्र्य शरीरमुद्वर्तयेत्। आकाशबिन्दुदोषोपशान्ति समाप्ता — su 43 अथ कुमारस्य कुमार्यां वा यस्योत्तमदन्ता पूर्वौ जातौ तत्र मातापित्रोर्मरणशङ्का भवति तत्र शान्तिरुच्यते — su 44 व्रीहियवतिलमाषानेकीकृत्याभिमन्त्र्य उत्तमजातदन्ताभ्या दशयति — su 47 अथ शिरसि अङ्गे वा काकोपविष्टदोष श्रूयते तस्य शान्तिरुच्यते — su 48 उल्मुकमभिमन्त्र्य काकमुखेन अपमृष्ट पुरुष पर्यापि करोति। उपरि भ्रामयित्वा दूरे निक्षिपति — su 49 अथ ससर्गदोषशान्तिरुच्यते। सर्वेषु रोगेषु शावदन्तादि कुनखिना वण्डेन ज्वरेणापामार्गादिरोगेषु ससर्गेषु सर्वदोषान्मुच्यते — su 50 अनृतमुक्त्वा आचमन करोति। वणिजि अनृत कृत्वा दोषो न भवति — su 51 यत्र क्वचित्खनति तत्र सर्वत्र यत्ते भूम इति खननदोषो न भवति — sū 53 अथ शकुनशान्तिरुच्यते। अपशब्द श्रुत्वा कपिञ्जलवाशित श्रुत्वा ग्रामे अरण्ये पक्षिवाशित श्रुत्वा वा स्वय वा क्रुद्धभाषण कृत्वा अन्यस्य वचन श्रुत्वा उलूकवाशने कपोतवाशने पूर्वतो वा उत्तरतो वा लोके निन्दित। यत्किचल्लोके विरुद्ध दृष्ट्वा श्रुत्वा सर्वत्र जपने स्वस्त्ययन भवति — sū 55 आकाशे यदि स्वपिति अरण्ये वा शून्ये गृहे वा पर्वते वा तदातदा यो अभ्य बभ्रूणा () इत्यृच जपित्वा स्वपिति — Keç has the following at the end of the adhyāya समाप्तानि नैमित्तिकानि सर्वज्ञानप्रबोधाय दुष्टदोषविनाशनैमित्तिकानि। नैमित्तिकान्यवश्य कर्तव्यानि। अकरणे धनधान्यपश्वादिविनाश जरायुज इति दुर्दिनमायन्नित्यादीनि (Kauç 38 1 fg) । अथाद्भुतानि वर्षे यक्ष्यादिनैमित्तिकानि (Kauç 93 1 fg) तान्यवश्य कार्याणि —

## Adhyāya vi

### Kandikā 47

Introduction अथ क्रमप्राप्तो अथर्ववेदविहितो ऽभिचार उच्यते। मीमासायामभिचारो निषिद्ध मनुस्मृतौ च विहितो ऽभिचार — su 2 आङ्गिरसकल्पोक्ता सभारा प्रत्येतव्या। दक्षिणस्या दिशि मण्डप कारयेत्तत्र यथोक्तविधिना गुरु। पताकातो॰र्णैर्युक्त द्वार स्मृत — sū 9 तथा तदग्न इत्यादि स्मर्तव्य सर्वत्र। अभ्यातानान्ते दूष्या दूषिरसीति सूक्तेन तिलकमणि सपात्याभिमन्त्र्य बध्नाति कारयिता कर्ता सदस्यश्च (cf Kauç 39 1 fg) आत्मरक्षार्थ — su 12 अधुना दोषा उच्यते शुक्लपक्षे त्रयोदश्या पूर्वाह्णे अभ्यातानान्त कृत्वा द्यावापृ-

थिवी उर्वन्तरिचमिति सूक्त कर्ता कनकरजतेति सूक्त(?) द्वाभ्या सूक्ताभ्या वेणुदण्ड छिनत्ति — sus 14 16 य इमा देवो मेखलामिति पञ्च चेति सूक्तेन (vi 133 1 2) मेखला सपात्य। अय वज्र इति सूक्तेन दण्ड सपात्य। य इमामित्यृचेन मेखला बध्नाति। वज्रो ऽसीति तृचेन सूक्तेन दण्ड गृह्णाति। नमो नमस्कृज्ञ इति सप्तभिश्च उपस्थान करोति शालाया बहि। तत शाला प्रविश्य व्रतादानीया समिध आदधाति शान्ता। व्रतश्रावण तस्मिन्करोति। अभ्यातानाद्युत्तरतन्त्र। दीक्षितस्त्रिरात्रमन शन। त्रिरात्रे निवृत्ते कृष्णपक्षे प्रतिपदि कर्म भविष्यति — su 17 आङ्गिरसदण्डवृश्चनसूक्त प्रतिपादन उक्त गृहीत्वा मेखलाया ग्रन्थिमालिम्पति आकृतास्यभिकृता इत्यृचा (vi 133 2) — sus 18 20 अय वज्र इति तिसृभि र्ऋग्भिर्यदश्नामि यज्जिरामि इति द्वाभ्यामृग्भ्या भोजन करोति यत्पिबामीत्यृचा उदक पिबति। अमुष्यस्थाने शत्रुनामग्रहण — sū 21 फडृतो मङ्गमद इत्येतेन मन्त्रेण भोजनपात्र भिनत्ति — su 22 इदमह मङ्गसदस्य तुरुष्कस्य मूतिकर्णपुत्रस्य प्राणापानावपद्धामीत्यनेन मन्त्रेण मेखला ग्रन्थ्या बध्नाति गाढ करोति — sus 25 27 द्यावापृथिवी उर्वेति सूक्तेन पशुवृक्षपत्र च गृहीत्वा शत्रोर्दक्षिणा धावत पद रज्जु छिनत्ति। तिरश्चीनत्रिकोणे एकैक एवमष्टावरान् सूत्रावृत्ति — su 28 तस्माच्छिद्रात्पासु च गृहीत्वा वधपत्रे (!for बधक°?) बद्धा

भ्रष्ट्रे न्यस्यति — su 30 अथवा एतत् . अभिचारतन्त्रमुच्यते। पश्चादग्ने करिष्वा (!) कूद्युपस्तीर्णाया etc — su 31 . उदक हस्ते कृत्वा दक्षिणामुख प्रक्षिपति — sū 32 Keç has nothing corresponding to this sutra, but seems to connect directly with su 33 Later, however after sū 38, a passage corresponding to this sūtra appears which contains nothing additional to the statement of Kauçika sū 33 इद च उष्णोदक मध्ये अक्षितसक्तून् (!) प्रक्षिप्य पिबेत् अनालोडितानेकोच्छ्वासेन (अनालोडिता°, as though °नुपमथिता° stood in the text) — sus 34–36 त्रीस्त्रीन्मुष्टी स्त्रिरात्र दीक्षा त्रिरात्रमेकैक पड्क्ते भुक्त आकृतास्यभिकृतेत्येवमादि (vi 133 2) स्मर्तव्य (cf s 17) — su 37 ब्राह्मणान्परिचारकाश्च भोजयित्वा पात्रस्थमुच्छिष्टमेकधा कृत्वा वङ्गमत्स्ये गर्ते प्रक्षिपेत् — sū 38 यदि ते धावन्तो दृश्यन्ते ततो द्वेष्यो मृतो जानीयात्. — sus 39-42 द्यावापृथिवी इति सूक्तेन लोहितशिरस शकशमाशयित्व। (!for शशक°?) प्रेतय त्कृत्वाभिमन्त्र्य दहति (Cod ददाति)। तत अग्ने यत्ते तप इति पञ्चभि (ii 19-23) सूक्तैरुपतिष्ठते (cf su 8)। अन्य कर्ता अभ्यातानान्त कृत्वा

कृकलासमष्टधा कृत्वा प्रत्यृच जुहोति — su 44 निवृत्य वेद्यामुपवेश्य खेदात्ता शरभृष्टी प्रत्यृच जुहोति — sū 45 शत्रुपदात्पांसु गृहीत्वा पश्चादग्नेर्निधार्य उदग्व्रजत्या खेदजननात्। निवृत्य खेदात्कृतान्पांसून् जुहोति — su 46—52 कृकलासशरीरे शर्करानवधाय विषमवधाय बध्नाति पाशे स इति पादेन। आमुमित्यादत्ते। मर्मणि खादिरेण स्रुवेण गर्त खनति अतीव य इति तत्र निदधाति — su 53 सचित्य मृत्तिकोपरि निदधाति द्यावापृथिवी इति सूक्तेन जुहोति — su 54 द्यावापृथिवी इति सूक्तेन आवलेखनी हृदये विध्यति — su 57 . शत्रुमारणकाम

Kandika 48

sū 1 अश्वत्थ कृकलास एरण्ड श्लेष्मातक खदिर शरसमिध आदधाति — sū 3 स्रुवाग्रे दण्ड बध्नाति — su 4 शत्रुमर्मणि निखनति — su 5 तौ अश्वत्थशाखाया प्रणुदति — su 6 यावन्त सपत्नास्तावन्त (?) पाशान् उदके स्नावयति — su 7 शत्रु क्रोशन्तमन्वाह। मरण भवति — su. 8 उपसमाधान। स्रुवग्रहण। जुहोति — su 9 कृकलासकर्म शरभृष्टिकर्म सपत्नक्षयणीयकर्माणि षट ग्राममेत्य च कर्माणि षट् मणिकर्म पाशकर्माणि त्रीणि विकङ्कतस्रुवकर्म एकोनविंशति तन्त्राणि भवन्ति — su 10 सर्पत्वच चूर्णयति — su 11 गोहरणे ऽभिचार — su.12 चौरागन्वाह (Cod चौरन्वाह) — sus 13 22 नैतातेति सूक्ताभ्या श्रमेण तपसेत्यनुवाक सदा गोहरणमारणेषु क्रियमाणेषु ब्रह्मचारी जपति। श्मशाने जपति। ऊबध्ये श्मशानमवधाय(?) ततो परिस्थित श्रमेण तपसेत्यनुवाक जपति। द्वादशरात्र यावत् अहरह तत मृतो देय इति जानीयात् — su 23 श्वेतमृत्तिकामभिमन्त्र्य शुने प्रयच्छति — sū 24 पलाशमणि सपाशाभिमन्त्र्य बध्नाति — su 25 इङ्गिड जुहोति — sū 27 इद ‹युज इति चितारन्यभिचार — su 28 इद् तद्युज इति सूक्तेन मध्यमपरिभवापर्णेन (?) फलीकरणाञ्जुहोति। यस्ति चासाविति सूक्तेन पञ्चर्चेन (vii 70) मध्यमपलाशेन फलीकरणाञ्जुहोति — sus 29—31 बर्हिर्लवनादिप्रतिष्ठापनान्त कृत्वा तमपि स्फोटयति शर अन्यमपि प्रणयति। निरमुमिति सूक्तेन स्तरण कृत्वा पुनर्मन्त्रेण स्तृणाति। निरमुमिति सूक्तेनाभ्यातानान्त कृत्वा इङ्गिड जुहोति — su 32 [illegible] पिधाय बाधकेन काष्ठेन हन्यात् — su 35 शत्रु दृष्ट्वा जपति — sū. 37 . विद्युद्धतवृक्षस्य समिध आदधाति — sū 38.. ऊर्ध्वशु-

